# ॥ एकाक्षरोपनिषत् ॥

एकाक्षरपदारूढं सर्वात्मकमखण्डितम् ।
सर्ववर्जितचिन्मात्रं त्रिपान्नारायणं भजे ॥

ॐ सह नाववतु सह नौ भुनक्तु ।
सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ
एकाक्षरं त्वक्षरेऽत्रास्ति सोमे
  सुषुम्नायां चेह दृढी स एकः ।
त्वं विश्वभूर्भूतपतिः पुराणः
  पर्जन्य एको भुवनस्य गोप्ता ॥ १॥

विश्वे निमग्नपदवीः कवीनां
  त्वं जातवेदो भुवनस्य नाथः ।
अजातमग्रे स हिरण्यरेता
  यज्ञैस्त्वमेवैकविभुः पुराणः ॥ २॥

प्राणः प्रसूतिर्भुवनस्य योनि-
  र्व्याप्तं त्वया एकपदेन विश्वम् ।
त्वं विश्वभूर्योनिपारः स्वगर्भे
  कुमार एको विशिखः सुधन्वा ॥ ३॥

वितत्य बाणं तरुणार्कवर्णं
  व्योमान्तरे भासि हिरण्यगर्भः ।
भासा त्वया व्योम्नि कृतः सुताक्ष्र्य-
  स्तवं वै कुमारस्त्वमरिष्टनेमिः ॥ ४॥

त्वं वज्रभृद्भूतपतिस्त्वमेव ।
  कामः प्रजानां निहितोऽसि सोमे ।
स्वाहा स्वधा यच्च वषट् करोति
  रुद्रः पशूनां गुहया निमग्नः ॥ ५॥

धाता विधाता पवनः सुपर्णो

विष्णुर्वराहो रजनी रहश्च ।
भूतं भविष्यत्प्रभवः क्रियाश्च ।
कालः क्रमस्त्वं परमाक्षरं च ॥ ६॥

ऋचो यजूंशि प्रसवन्ति वक्त्रा-
त्सामानि सम्राड्वसुवन्तरिक्षम् ।
त्वं यज्ञनेता हुतभुग्विभुश्च
रुद्रास्तथ दैत्यगणा वसुश्च ॥ ७॥

स एष देवोऽम्बरगश्च चक्रे
अन्येऽभ्यधिष्ठेत तमो निरुन्ध्यः ।
हिरण्मयं यस्य विभाति सर्वं
व्योमान्तरे रश्मिमिवांशुनाभिः ॥ ८॥

स सर्ववेत्ता भुवनस्य गोप्ता
ताभिः प्रजानां निहिता जनानाम् ।
प्रोता त्वमोता विचितिः क्रमाणां
प्रजापतिश्छन्दमयो विगर्भः ॥ ९॥

सामैश्चिदन्तो विरजश्च बाहूं
हिरण्मयं वेदविदां वरिष्ठम् ।
यमध्वरे ब्रह्मविदः स्तुवन्ति
सामैर्यजुर्भिः क्रतुभिस्त्वमेव ॥ १०॥

त्वं स्त्री पुमांस्त्वं च कुमार एक-
स्त्वं वै कुमारी ह्यथ भूस्त्वमेव ।
त्वमेव धाता वरुणश्च राजा
त्वं वत्सरोऽग्न्यर्यम एव सर्वम् ॥ ११॥

मित्रः सुपर्णश्चन्द्र इन्द्रो रुद्र-
स्त्वष्टा विष्णुः सविता गोपतिस्त्वम् ।
त्वं विष्णुर्भूतानि तु त्रासि दैत्यां-
स्त्वयावृतं जगदुद्भवगर्भः ॥ १२॥

त्वं भूर्भुवः स्वस्त्वं हि
स्वयंभूरथ विश्वतोमुखः ।
य एवं नित्यं वेदयते गुहाशयं
प्रभुं पुराणं सर्वभूतं हिरण्मयम् ॥ १३॥

हिरण्मयं बुद्धिमतां परां गतिं
स बुद्धिमान्बुद्धिमतीत्य तिष्ठतीत्युपनिषत् ॥

ॐ सह नाववतु सह नौ भुनक्तु ।
सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इत्येकाक्षरोपनिषत्समाप्ता ॥